कक्षीणः श्लेष्मा, मध्यक्षीणो वातः हीनक्षीणं पित्तं
कक्षीणः श्लेष्मा, अधिकक्षीणो वातः मध्यक्षीणं पित्तं
ीणः श्लेष्मा, हीनक्षीणो वातः अधिकक्षीणं पित्तं
क्षीणः श्लेष्मा, अधिकक्षीणो वातः हीनक्षीणं पित्तं मध्य-
ः श्लेष्मा, मध्यक्षीणो वातः अधिकक्षीणं पित्तं हीन-
ः श्लेष्मा । क्षीणेत्यादि । अत्र मध्यशब्देन स्वस्थोऽ-
ीयते, अधिकशब्देन च वृद्धः । तत्र क्षीणमध्याधिक-
षट् । तद्यथा—क्षीणो वातः स्वस्थं पित्तं वृद्धः श्लेष्मा,
ो वातः वृद्धं पित्तं स्वस्थः श्लेष्मा, स्वस्थो वातः पित्तं
वृद्धः श्लेष्मा, वृद्धो वातः क्षीणं पित्तं स्वस्थः श्लेष्मा,
ो वातः पित्तं वृद्धं क्षीणः श्लेष्मा, वृद्धो वातः स्वस्थं
क्षीणः श्लेष्मा । अथ द्विक्षीणैकवृद्धांस्त्रीनाह—वातपित्ते
वृद्धः श्लेष्मा, वातश्लेष्माणौ क्षीणौ पित्तं वृद्धं, पित्त-
माणौ क्षीणौ वातो वृद्धः । अथ द्विवृद्धैकक्षीणानाह—
पित्ते वृद्धे क्षीणः श्लेष्मा, वातश्लेष्माणौ वृद्धौ क्षीणं पित्तं,
श्लेष्माणौ वृद्धौ क्षीणो वातः । एवमनेन प्रकारेण,
ख्याताः कथिताः, त्रयो दोषाः वातपित्तश्लेष्माणः ।
ार्धैः श्लोकैरुच्यते । तद्यथा,—

भवेत् ।
केन च ॥ १ ॥
कफौ ।
तः ॥ २ ॥
३ ॥
॥

मध्यः श्लेष्मोल्बणो वायुः पित्तं हीनं तथा स्थितम् ॥१३॥
मध्यवातोऽधिकं पित्तं हीनवृद्धस्तथा कफः ।
एवमेते भवन्त्यत्र सन्निपातास्त्रयोदश ॥ १४ ॥
पूर्वैर्द्वादशभिः सार्धं विकल्पाः पञ्चविंशतिः ।
यथा वृद्धैस्तथा क्षीणैर्दोषैः स्युः पञ्चविंशतिः ॥ १५ ॥
क्षीणस्वस्थाधिकैरेभिर्दोषभेदा भवन्ति षट् ।
क्षीणः समीरणस्तत्र स्वस्थं पित्तं कफोऽधिकः ॥ १६ ॥
क्षीणो वायुः कफः स्वस्थः पित्तमत्राधिकं तथा ।
क्षीणं पित्तं मरुत् स्वस्थो भेदोऽन्यस्मिन् बली कफः ॥१७॥
क्षीणं पित्तं कफः स्वस्थः प्रवृद्धस्त्वधिको मरुत् ।
श्लेष्मा क्षीणोऽनिलः स्वस्थः पित्तमत्र तथोल्बणम् ॥१८॥
कफः क्षीणः समं पित्तं प्रवृद्धस्तु समीरणः ।
क्षीणस्वस्थाधिकैरेवं भेदाः षट् परिकीर्तिताः ॥ १९ ॥
क्षीणं गते मरुत्पित्ते प्राप्तो वृद्धिं तथा कफः ।
क्षीणौ समीरणकफौ तथा स्यात् पित्तमुत्कटम् ॥ २० ॥
क्षीणौ पित्तकफौ तद्वन्नभस्वान् स्यात्तु वृद्धिमान् ।
द्वौ क्षीणावेको वृद्धश्च भेदत्रयमिति स्मृतम् ॥ २१ ॥
वातपित्ते गते वृद्धिं संप्राप्तश्च क्षयं कफः ।
वृद्धौ वातकफौ तद्वत् पित्तं चाथ क्षयं गतम् ॥ २२ ॥
तद्वत् पित्तकफौ वृद्धौ प्रक्षीणश्च मरुत् पुनः ।
एकक्षीणद्विवृद्धैश्च त्रयो भेदा भवन्त्यमी ॥ २३ ॥
क्षीणमध्याधिकैस्त्वेवं भेदा द्वादश कीर्तिताः ।
प्रकृतिस्थैः समीराद्यैस्तथैकः परिकीर्तितः ॥ २४ ॥
त्रिषष्टिर्दोषभेदानामिति सम्यङ्निरूपिता ॥ इति ।

एतेषां वातपित्तश्लेष्मणां लक्षणानि उच्यन्ते—तद्यथा—वातवृद्धौ वाग्बाहुल्यं गात्रस्फुरणं ऊष्मकामिता निद्रानाशोऽल्पवाक्त्वं गाढवर्चस्कं चेति, पित्तवृद्धौ पीतावभासता सन्तापः शीतकामित्वं अल्पनिद्रता मूर्च्छा बलहानिः दौर्बल्यं पीतविण्मूत्रनेत्रत्वं चेति, श्लेष्मवृद्धौ शौक्ल्यं शैत्यं गौरवमवसादं तथा निद्रा वह्निविश्लेषश्च । वातक्षये मन्दचेष्टता अल्पवाक्त्व मप्रहर्षो मूढसंज्ञता, पित्तक्षये मन्दोष्माग्निता रूक्षताऽन्तर्दा आमाशयेतरश्लेष्माशयशिरसां शून्यता सन्धिशैथिल्यं तृष दौर्बल्यं च । एवंविधैर्लक्षणैः प्रकृतिसमसमवेतानां वृद्ध क्षीणानां च वातपित्तश्लेष्मणामवगमो मिश्रैश्च लक्षणैः सं सन्निपातावगम इति ।

क्षीणमध्याधिकस्य एकक्षीणवृद्धानां च केषांचिल्लक्षणानि
च्यन्ते । तद्यथा—

कैः क्षीणस्त्वेको